TRIVANDRUM SANSKRIT SERIES

No. CXXV.

Śrī Citrodayamañjarī

No. XIV.




# कोकसन्देशः ।

# KOKASANDEŚA

EDITED BY

K. SAMBAŚIVA ŚASTRĪ,

*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCORE.

TRIVANDRUM: PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS, 1937.

TRIVANDRUM SANSKRIT SERIES.

No. CXXV.

Śrī Citrodayamañjarī.

No. XIV.

THE

# KOKASANDEŚA

OF

Viṣṇutrāta

EDITED BY

K. SĀMBAŚIVA ŚĀSTRĪ

*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCORE.

TRIVANDRUM:

PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,

1937.

अनन्तशयनसंस्कृतग्रन्थावलिः।

ग्रन्थाङ्कः १२५.

श्रीचित्रोदयमञ्जरी।

ग्रन्थाङ्कः १४.

---

# कोकसन्देशः

विष्णुत्रातविरचितः

पौरस्त्यग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधितः।

---

स च

अनन्तशयने

महोन्नतमहामहिमश्रीचित्रावतारमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितः।

---

कोलम्बाब्दाः ११९२. क्रैस्ताब्दाः १९३७.

॥ श्रीः ॥

श्रीमूलावनिपालमौलिमणिना सङ्कल्पितश्रीरिव
श्रीमूलात्मजनिस्तथा सहजया लक्ष्म्या च सम्भावितः ।
स्वातिज्योतिरिवादितः समुदितश्चित्रावतारः स्वयं
मार्ताण्डाग्रसरो विराजति महाराजः स रामाभिधः ॥

भास्वद्वर्णमणिः प्रवालमृदुला श्रुत्यावलङ्कारिणी
श्रीमद्वञ्चिवसुन्धरानवयशोराशिप्रकाशात्मिका ।
उत्फुल्लत्सुकृतिप्रसाधनधृतामोदोन्नदड्डिण्डिमा
श्रीचित्रोदयमञ्जरी सुमनसां सर्वस्वमुज्जृम्भताम् ॥

के. साम्बशिवशास्त्री.

# PREFACE.

This work namely "Kokasandeśa" was composed by one Viṣṇutrāta, a poet who lived at Vāzhappaḷḷi (in Malabar) and who was a friend of one Brahmin named Brahmadatta. Its theme is the message sent to his beloved, residing in the village of Kāmārāma, through a Koka (cuckoo), by the prince of Śrīvihārapura, who was carried away to a distant place by the power of some magical talisman. Having procured a context of separation, the imaginative clique of the magical powers utilised in opening the message is a great deviation from all the other reputed Sandeśas. Herein are fully described the various paths leading to the Pūrṇānanda temple of Bhūtanātha, starting from Vāraṇa and it is singularly magnificent in its delineations of the different places and the presiding deities of the temples there with particular reference to comtemporary importance,

चापल्योक्तिर्मम गुणवति त्वय्युपेताभिनन्द्या
सर्वेषां स्यात् खगवर ! जगत्यत्र नूनं नराणाम् ।
सद्भिर्दूरीकृतमपि सदैवाविलं दोषबुद्ध्या
गङ्गासङ्गात् कृतकसरितां वारि पुण्यं न किं स्यात् ॥

(पृ. ५. श्लो. १४.)

This Sandeśa abounds in such exquisitely beautiful verses of moral precepts, but this verse :—

तद्रम्याराविविविविविविक्षुः सरः सुन्दराख्यं
मोदं पापं दददददः सव्यतो याहि तस्मात् ।
कान्तारूढो रुरुरुरुरुघ्राति यत्तीरमास्ते
के गङ्गावानिनिनिनिनिनिन्दाङ्गजं यो हि भानाम् ॥

(पृ. ९. श्लो. ४१.)

is but one among the many rough verses that seem to frighten the heroine under the pangs of separation as well as the reader who is held aback by their harsh and unpleasant sounds.

आसीद् विप्रो हरिनतिरतः कोऽपि रम्भाविहारे
विष्णुत्रातो द्विजपरिवृढब्रह्मदत्तैकमित्रः ।
तेनैतस्मिन् सपदि रचिते कोकसन्देशकाव्ये
पूर्णस्तावत् समजनि रसैश्चाप्यसौ पूर्वभागः ॥

(पृ. २१. श्लो. १२०.)

The author Viṣṇutrāta who is thus eulogised in such stanzas is claimed to be a close friend of Brahmadattadvija. This Brahmadatta is well known as a contemporary of Śrī Nārāyaṇa Bhaṭṭapāda and so the date of this poet also should be somewhere about the 16th century of the Christian Era. The following are the places to be visited by the Koka :—

| | | |
|---|---|---|
| 1. | The place Vāraṇa | (page 7. Verse 33) |
| 2. | The lake Sundara | (p. 9. V. 46) |
| 3. | The capital Sacandra | (p. 12. V. 60) |
| 4. | The Śāntākāra | (p. 12. V. 65) |
| 5. | The river Ramyā | (p. 14. V. 72) |
| 6. | Lokabhadra the temple of Śiva | (p. 16. V. 85) |
| 7. | Ayodhya | (p. 20. V. 104) |
| 8. | Pūrṇānanda the temple of Bhūtanātha. | (p. 21. V. 110) |

The important manuscript of this Sandeśakāvya belongs to Brahmaśrī Brahmadattan Nambūrippād of Kūdallūr Mana, and was handed over to be printed by the owner out of his great magnanimity. Expressing our deep gratitude to the owner of the manuscript, we place the Sandeśa before the enlightened public.

Trivandrum,
10-8-1112.

K. SĀMBAŚIVA ŚASTRĪ.

॥ श्रीः ॥

## निवेदना ।

---

कोकसन्देशोऽयं रम्भाविहार (०७४३।८८१) निवासिना केनापि विष्णुत्रातनाम्ना ब्रह्मदत्तद्विजसखेन कविना विरचितः । कस्यापि मान्त्रिकस्य यन्त्रमहिम्ना झटिति दूरदूरं देशान्तरं प्रापितेन श्रीविहारपुरीयेण राजकुमारेण कामारामनामधेयं पुरं प्रति स्वप्रेयस्यै कोकमुखेन नीयमानः सन्देशोऽस्य प्रमेयः । कथञ्चिदपि विरहितां सम्पाद्य सन्देशस्य द्वारं समुद्घाटयितुं कल्पितोऽयं मान्त्रिकयन्त्रप्रयोगोऽत्र सन्देशान्तरच्छायातः सुदूरं व्यत्यस्तः प्रतिभाति । वारणाभिधानायाः स्थल्याः पूर्णानन्दाख्यभूतनाथक्षेत्रं यावदनेके पन्थानः सम्यगिह विवृताः, प्रायशस्तादात्विकप्राधान्यपरिचिन्तनया तत्तत्क्षेत्रदेवतावर्णनादिना विशिष्यन्ते ।

चापल्योक्तिर्मम गुणवति त्वय्युपेताभिनन्द्या
सर्वेषां स्यात् खगवर! जगत्यत्र नूनं नराणाम् ।
सद्भिर्दूरीकृतमपि सदैवाविलं दोषबुद्ध्या
गङ्गासङ्गात् कृतकसरितां वारि पुण्यं न किं स्यात् ॥

(पृ० ५. श्लो० २४.)

इत्यादिभिः सदुपदेशपर्यवसायिभिः सरससरसैः पद्यैरनुगुम्फितमपीदं सन्देशकाव्यं —

तद्रम्याराविविविविविविविक्षुः सरः सुन्दराख्यं
मोदं पापं दददददः सव्यतो याहि तस्मात् ।
कान्तारूढो रुरुरुरुरुरुत्राविं यत्तीरमास्ते
के गङ्गावानिनिनिनिनिनिनिन्दाङ्गजं यो हि भानाम् ॥

(पृ० ९. श्लो० ४९.)

इत्याद्यैरनेकैः शर्करिलैः कर्कशैः पद्यैर्विरहिणीमिव नायिकां भीषयाणं पदविन्यासाय न सम्मन्यते ।

आसीद् विप्रो हरिनतिरतः कोऽपि रम्भाविहारे
विष्णुत्रातो द्विजपरिवृढब्रह्मदत्तैकमित्रः ।
तेनैतस्मिन् सपदि रचिते कोकसन्देशकाव्ये
पूर्णस्तावत् समजनि रसैश्चाप्यसौ पूर्वभागः ॥
(पृ० २२. श्लो० १२०.)

इति दिशा प्रस्तूयमानोऽस्य कर्ता विष्णुत्रातो ब्रह्मदत्तद्विजवरमित्र इति तत्रैवोद्घोषणात् श्रीनारायणभट्टपादसमसमयजीवितया ब्रह्मदत्तस्य सुप्रसिद्धेश्च स्यादस्यापि कवेः क्रिस्त्वब्दीयषोडशशतकं जीवितसमयः । इह च काव्ये कोकगमनाय निर्दिष्टाः स्थलविशेषा अधस्ताद् दर्शिताः ।

१. वारणाख्यस्थली (पृ० ७ श्लो० ३३)
२, सुन्दराख्यं सरः (पृ० ९. श्लो० ४६)
३. सचन्द्राभिधा राजधानी (पृ० १२. श्लो० ६०)
४. शान्ताकाराभिधानं पुरम् (पृ० १२. श्लो० ६५)
५. रम्याख्या सरित् (पृ० १४. श्लो० ७२)
६. लोकभद्रशिवक्षेत्रम् (पृ० १६. श्लो० ८५)
७. अयोध्या (पृ० २०. श्लो० १०४)
८. पूर्णानन्दाख्यभूतनाथक्षेत्रम् (पृ० २१. श्लो० ११०).

अस्य सन्देशकाव्यस्य प्रसाधनोपयोगिनी मातृका —

कूटल्लूर् ब्रह्मश्री ब्रह्मदत्तनून्म्पूरिप्पाट्टुस्वामिका तत्स्वामिना प्रसिद्धीकरणे साहायकदाने महत्या श्रद्धया समर्पिता । तदधुना तेषु ग्रन्थस्वामिषु कृतज्ञतां प्रकाशयन्निमं सन्देशं महाजनसमक्षमवतारयामि ।

अनन्तशयनम्,
१०-८-११२.

के. साम्बशिवशास्त्री.

॥ श्रीः ॥

विष्णुत्रातविरचितः

# कोकसन्देशः ।

---

## पूर्वभागः ।

श्रीमान् कोऽपि क्षितिपतिसुतो यौवराज्याभिषिक्तः
शश्वद् रम्ये निजपुरवरे सर्वसम्पत्समृद्धे ।
सौधोत्सङ्गे प्रणयविवशस्वान्तया कान्तयामा
रेमे स्वैरं स्मरपरवशोऽक्षीणलावण्यवेण्या ॥ १ ॥

काले तस्मिन् निजकुशलतां सर्वतो दर्शयिष्णु-
र्दूरेत्योऽस्मै समुपहृतवान् मान्त्रिकः कोऽपि यन्त्रम् ।
यस्मिन् भक्त्या शिरसि निहिते स्वादधिष्ठीयमानाद्
देशाद् दूरे वयमिति नृणां चित्तदेशोऽवभाति ॥ २ ॥

आदायैतत् करतलयुगेनाथ सोऽयं कदाचि-
ल्लोलापाङ्ग्या सह दयितया द्रष्टुकामोऽनुभावम् ।
भक्त्या युक्तः शिरसि निदधे तावदात्मानमस्मात्
सौधोद्देशात् सततसुखदाद् दूरदूरे ददर्श ॥ ३ ॥

हा हा कष्टं तदनु स विधेर्वैपरीत्यात् तदानी-
मेतादृक्त्वं किमपि न विदन्नेव यन्त्रस्य तस्य ।
खेदान्धोऽभूत् प्रियसहचरीविप्रयोगेन कामी
को वा लोके निजमतिबलाद् भावि दैवं रुणद्धे ॥ ४ ॥

G. P. T. 16. 500. 14-6-111.

मन्दीभूतैर्झटिति करणैः स्पन्दितुं चाप्यशक्तः
सोऽयं तत्र क्षणमिव वसन् कृत्यमूढान्तरात्मा ।
सीताजानिः स्वयमिव हनूमन्तमत्यन्तमाप्तं
कोकं दृष्ट्वा कमपि ललितं सन्दिदेशैनमेवम् ॥ ५ ॥

कारुण्याब्धे! कुशलमयि! ते किं सकान्तस्य ताव-
च्चारुण्यस्मिन् कुटचविटपे विश्रमायास्स्व किञ्चित् ।
निर्वर्ण्य त्वामधिकमुदिते लोचने मामकीने
हैरण्याभं दिनकरमिव प्रातरङ्ग! त्वदीये(?)॥ ६ ॥

श्रीमन्! कोक! द्विजवर! सुपर्वागतो वागतोऽसि
त्यक्त्वा देवान् विलसदमराक्रीडतः क्रीडतस्त्वम् ।
स्वःस्त्रीस्नानप्रभवदभिरामोदकामोदकान्तात्
तोयक्रीडासरससुमनोमानसान्मानसान्नु ॥ ७ ॥

मित्रालोको विनुदति यथा खेदमन्यत् तथा नो
नृणां सम्पद्यपि विपदि वा वस्तु किं वेत्सि नैतत् ।
वाच्यो हेतुर्न खलु गुरुता नास्य वीक्ष्यानुभूतिः
प्राप्ता यैस्तैर्विदितमिदमत्रापरैः किं विमूढैः ॥ ८ ॥

विश्वासो मे भवति भवति प्राप्तिमात्रेण तस्माद्
वक्ष्ये नुन्नो विवर! विवरप्रेप्सुनालं स्मरेण ।
मत्प्रेयस्या हृदयहृदयन्नाशु पार्श्वे सखे! स्या
नूनं चित्तं सरति सरति प्रेष्ठदूतेऽङ्गनानाम् ॥ ९ ॥

रात्रौ रात्रौ ननु विरहजं प्राप्यते दुःखमेवं
शश्वत् कान्ताप्रसित! भवता यत्तदस्मिन् ब्रुवे त्वाम् ।

येन ज्ञातं यदिह तदिदं शक्यते तं हि वक्तु
प्राप्तं दुःखं यदपि यतते सोऽयमेवास्य शान्त्यै ॥ १० ॥

तप्तस्वर्णप्रतिमवपुषो विद्रुमाभासिचञ्चो-
राशातेन्द्रोपलरुचिमनोहारिकण्ठस्य तेऽद्य ।
शुम्भन्मुक्ताविशदयशसः पद्मरागेक्षणस्य
प्रेक्षामात्रान्मम करगतं कोक! सर्वार्थजातम् ॥ ११ ॥

स्वस्यां पुर्यामभिनवसुधाक्षालिते सौधशृङ्गे
मोदाद् गुर्वीं किमपि वहतोः सन्ततं मन्मथाज्ञाम् ।
दैवादद्य प्रमदवशयोरावयोर्विप्रयोगो
जातोऽसह्यः पतग! युवयोर्वासरान्तेषु यद्वत् ॥ १२ ॥

प्रेयस्या मे प्रतिनवसुधासोदरः सोऽपि हासो
वीणातन्त्रीविरणितधुरीणं तदाभाषणं च ।
उद्यानान्ते मृदुमृदुरणन्नूपुरं तच्च यानं
तास्ता लीलाः प्रियसख! दहन्त्यद्य मां चिन्त्यमानाः॥१३॥

अङ्गान्यङ्ग! स्मरशरशिखिज्वालमालाभियोगाद्
भस्मीभूय ध्रुवमतिसितान्यद्य दृश्यान्यमूनि ।
वाण्यश्चेमाः परिलघु परिस्पन्दमाना मुखान्मे
खेदं कान्ताविरहजनितं तुभ्यमद्य ब्रुवन्ति ॥ १४ ॥

पश्य श्रीमन्नपि च निनदन्मेघमालाविलोल-
द्वातः केकाकलरुतमिलच्चातकालीनिनादः ।
सारङ्गाङ्गीकृतदरहँसत्केतकीगन्धबन्धुः[२]
प्राप्तः कालः स हि विरहिणां हन्त सन्तापदायी॥ १५ ॥

---

१. 'युज्यते' इति, २. 'हसन्मालती' इति च पाठान्तरम् ।

भद्राभ! द्रागिह दहति मां शीतलो वातपोतो
धारा धाराधरनिपतितास्तापमातन्वते मे।
मारो मा रोदयति परितो बाणपूगान् विमुञ्चन्
कान्ता कान्ताजनविरहिणां प्रीतये कानुवृत्तिः॥ १६॥

विद्युल्लेखावलयिजलदा जातिसंसृष्टवाता
श्चैन्द्रश्चापः कुटचकुसुमभ्रान्तभृङ्गाङ्गनाली।
एतत् सर्वं कथमपि मया कोक! सोढव्यमेवं
हाहा कष्टं कथमिव तया सह्यते पेलवाङ्गया॥ १७॥

सारासारा विधुरविधुरस्वभ्रमा स्वभ्रमाला
श्यामा श्यामामुदितमुदितप्राणवत्प्राणवह्नी (?)।
हंस्या हंस्या तुदति तुदतिभ्रेजिता भ्रेजिताधिं
सा तां सातां रुचिर! रुचिरस्वङ्गका स्वङ्गकाम्याम्॥ १८॥

तस्मादस्मात् त्वरितमुपगम्यान्तिकं कोक! तस्याः
सन्तापं तं शमय वचसा मामकेनामृतेन।
स्त्रीणां मोदं नहि वितनुते किं वियोगातुराणां
दूतेनोक्तः प्रियतमवचोगुम्फमाधुर्यभूमा॥ १९॥

यो वा रक्षत्युरुतरविपद्वारिधेरात्मशक्त्या
जन्तून् नास्मात् पर इह पुमानस्ति लोके गरीयान्।
आश्वस्तानां लगति हृदयं साधु सर्वात्मनास्मि-
न्नन्यैः सर्वैरपि सुचरितं वर्ण्यते चैतदीयम्॥ २०॥

त्वद्वंश्येषु द्विजवर! बहुष्वत्र सत्सु त्वमेकः
खेदानां मे प्रशमनविधौ हन्त नूनं प्रवीणः।

अभ्रे दीव्यत्स्वपि बहुविधं ज्योतिषां मण्डलेषु
ध्वान्तौघानां ननु शमयिता नैशिकानां शशाङ्कः ॥ २१ ॥

किञ्चित् कार्यं तव खलु भवेद् धास्यतो मत्प्रियार्थे
मत्प्रेयस्याः परिसरभुवं पक्षिवंशावतंस ! ।
तस्यास्तावद् विरहरुजया क्षीयमाणाङ्गवल्ल्याः
सातत्योदित्वररुचिसुधानन्दिते लोचने यत् ॥ २२ ॥

एको लाभो यदि खलु भवेत क्वापि कार्येषु यत्नः
कार्यः सर्वैरपि बहुफले तत्र किं वर्णनीयम् ।
भावीन्यस्याः किमपि च समाश्वासनं ते यशश्च
स्फीतं मोदो मम च तदितो यातुमभ्युद्यतः स्याः ॥ २३ ॥

चापल्योक्तिर्मम गुणवति त्वय्युपेताभिनन्द्या
सर्वेषां स्यात् खगवर ! जगत्यत्र नूनं नराणाम् ।
सद्भिर्दूरीकृतमपि सदैवाविलं दोषबुद्ध्या
गङ्गासङ्गात् कृतकसरितां वारि पुण्यं न किं स्यात् ॥ २४ ॥

कामारामाह्वयपुरवरं कामिनां कामदं तद्
गन्तव्यं ते गगनपथगैः सौधशृङ्गैर्मनोज्ञम् ।
शृङ्गाराङ्गीकरणसुभगैरङ्गनानां कदम्बैः
सङ्गीतादावधिकनिपुणैर्भासमानं समन्तात् ॥ २५ ॥

अन्यत् किञ्चित् तव शृणु हितं गच्छतः स्वच्छवीथ्या
प्राणास्त्वेते नयनविषयाः साधु रक्ष्याः सदैव ।
रम्ये देशे ..रसमनया पाक्षिकापायशून्ये
वस्तव्यं ते पतग ! दिवसे नाडिकामात्रशिष्टे ॥ २६ ॥

घोराकारां जलदनिकुरुम्बातिकालां ग्रसन्तीं
लोकान् खद्योतकगणमिषादस्थिमालां दधानाम् ।
उद्यद्भीमस्तनितनिनदव्याजचण्डाट्टहासा-
मागच्छन्तीं कथमपि सहेथा निशायातुधानीम् ॥ २७ ॥

प्रातर्यास्यन्नथ मुररिपोर्धाम गत्वैतदारात्
पश्यन्नम्भोरुहदरगदाचक्रदीप्तं स्वरूपम् ।
तत्पादाब्जे निहितहृदयो मोदमानः पुरस्ता-
दास्स्वादूरे सह दयितया भक्तिभारावनम्रः ॥ २८ ॥

लक्ष्मीर्यस्मिन् वसति सरसं कालकान्तालकान्ता
यो वा नित्यं महितचरणो भासुराणां सुराणाम् ।
सम्प्राप्तास्त्वां शरणमनिशं कञ्जनाभाञ्जनाभा-
नीलच्छायं नतजनमलं भावयन्तं वयं तम् ॥ २९ ॥

इत्थं नुत्वा मुरभिदमसुं श्रीविहाराख्यदेशा-
दस्मान्मोदान्मुकुलितकरान् मानयन् सर्वलोकान् ।
भ्रातर्यायास्तदनु सरसापाङ्गलीला तदीया
मार्गे तापक्षपणनिपुणैवानुयास्यत्यपि त्वाम् ॥ ३० ॥

आपादाग्रस्तबकितकदम्बावलीफुल्ललोल-
छोलम्बालीकलकलमिषादाशिषं भाषमाणः ।
प्रातः प्रीत्या मम सहचरीमन्दिरं यास्यतस्ते
वातोऽन्वीपो मृदुतरगतिर्यावदावाति नूनम् ॥ ३१ ॥

एतेनान्यैरपि सुशकुनैः शक्यमेवानुमातुं
क्षिप्रं सिध्येन्मनसि निहितं कार्यजातं तवेति ।

शास्त्रोक्तानामिह भुवि सतां वासतां वा फलानां
नावस्थानं व्यभिचरणतो दृश्यते विश्ववन्द्य ! ॥ ३२ ॥

आभोगैः स्वैरथ जनमनोनन्दिनी नातिदूरे
द्रष्टव्या स्याज्जगति विदिता वारणाख्यस्थली ते ।
सेयं सेव्या पतग ! भवता मङ्गलानामवाप्त्यै
दत्ते सेवा हितमिह सखे ! साधु पुण्यस्थलीनाम् ॥ ३३ ॥

संबिभ्राणं सृणिमतिघृणं वारणास्यं पुराणं
लाक्षाशोणं कमलचरणं विघ्नघातप्रवीणम् ।
बिभ्रद् व्यालं तरलभसलं गण्डयोर्दानकालं
तेजोजालं परमविरलं यत्र सत्कर्णतालम् ॥ ३४ ॥

सम्प्राप्यैता भवनमहितैरिन्द्रकैर्देवसङ्घैः
सेवालोलैरधिकनिबिरीसोपशल्यां सदैव ।
शैवं देवं निजपदजुषामन्तरायावसायं
चित्रैः स्तोत्रैः प्रियसख ! भवान् दीव्य दीव्येति दीव्येत् ॥

तातोत्सङ्गे मुदितमुदितो देव ! सङ्क्रीडमान
कोटीरान्तर्गतनवसुधाभानुखण्डं विलोक्य ।
शुण्डाग्रेण स्पृशसि कदलीपक्वशङ्की मुहुर्य-
स्तस्मै तुभ्यं गजमुख ! जगन्नाथ ! भूयो नमोऽस्तु ॥ ३६ ॥

इत्थं स्तुत्वा द्विरदवदनं धाम लब्ध्वा तदीयं
कारुण्यं च प्रियसहचरीमानमय्यादरेण ।
पुष्यच्छायाशबलितसमस्ताशमाशु प्रयायाः
कार्यं लब्ध्वा निवसति पुनः कोऽनु तत्रैव तूष्णीम् ॥ ३७ ॥

स्वल्पं मार्गं तदनु सरतो भूधरस्तुङ्गशृङ्गो
दृश्यो दूरादधिकमरुणो धातुधाराङ्गरागेण ।
तस्य प्रस्थे कनकलतिकालिङ्गितैः कल्पवृक्षै-
र्हृद्याकारा लसति नितरां काचिदुद्यानभूमिः ॥ ३८ ॥

तस्यां नित्यं सकलजगतां स्थायुका मङ्गलाय
प्रालेयाद्रेः शुभपरिणतिः कापि नीलोत्पलाभा ।
कामारातेर्वपुषि विमले वामभागीभवन्ती
दिष्ट्या यावत् सफलयति ते लोचने पुण्यभाजः ॥ ३९ ॥

सासाद्याद्या मम मत! ततस्वान्तवृत्ते! त्वयालं
पापावावाहहहदददर्थाश्च यस्याः प्रणामः ।
यां यांतीतीरुरुगगगर्भालयस्थां निहन्त्रीं
नानासंसन्ननननतितितिक्षावती भाति नृणाम् ॥ ४० ॥

पूजान्ते तां कनकरचितैर्भूषणैर्भूषयत्सु
क्ष्मादेवेषु त्वरितमुपगम्यान्तिकं सन्नतः स्याः ।
काले तावत् तव तनुरुचीमेलनोद्दामरोच-
द्भूषाशोभा भवति भविता मोदपूर्णाशया सा ॥ ४१ ॥

गङ्गालोलोऽप्यपगततदीयोपभोगोऽथमस्माद्
गात्रे नूनं लसति पलितस्येव पाण्डुत्वमस्य ।
इत्याशङ्का तव हृदि सतीत्याकलय्यापनेतुं
यस्यै देहं व्यभजत हरो देवि! तस्यै नमस्ते ॥ ४२ ॥

एवं नत्वा गिरिवरसुतां भक्तिनम्रः सकान्त-
स्तत्कारुण्यं किमपि समवाप्याथ यातुं यतस्व ।

तावल्लक्ष्या विहितगिरिजावन्दनाः सुन्दराङ्ग्यः
सञ्चारिण्यः स्वयमिव तदीयाज्ञया हेमवल्ल्यः ॥ ४३ ॥

हासेष्वासां प्रतिदिशमलं कन्दलत्सु प्रिया ते
सेयं हास्या बिसकिसलयाशङ्कया नो यथा स्यात् ।
वर्तेथास्त्वं निपुणहृदय ! स्त्रीजनो मुग्धबुद्धी
रक्ष्यः कान्तैः सकलविपदोऽतर्कितं सङ्गतायाः ॥ ४४ ॥

आस्ते पान्थान् धृतफलभरः प्रीणयन् मार्गदेशे
क्रोशार्द्धेऽस्मात् खगवर ! गृहीवाग्रतश्चूतशाखी ।
शाखां काञ्चित् सरणिमनिशं नाकिनां मार्जयन्तीं
कञ्चित् कालं सह दयितयालङ्कुरुष्वैतदीयाम् ॥ ४५ ॥

तद्रम्याराविविवित्रिविविविक्षुः सरः सुन्दराख्यं
मोदं पापं दददददः सव्यतो याहि तस्मात् ।
कान्तारूढो रुरुरुरुरुव्राति यत्तीरमास्ते
के गङ्गावानिनिनिनिनिनिन्दाङ्गजं यो हि भानाम् ॥

यातस्यैतत् तव भृशतरं पङ्कजानां विकासात्
तत्रोष्णत्वात् किमपि परितः सूर्यकान्तोपलानाम् ।
जाड्यस्याल्पप्रशमनवशान्मज्जनादप्यृषीणां
प्राप्तं मध्यन्दिनमिति सखे ! शक्यमेवानुमातुम् ॥ ४७ ॥

तावन्मज्जन्मुनिजनजटाजूटलग्नाम्बुवर्षी
मन्दो वातस्त(व) तु दुरितं मार्गखेदं च हन्यात् ।
किञ्चैतस्य क्वचन सरसस्तीरदेशे शकुन्तैः
क्रीडन् किञ्चित् क्षपय समयं प्रीणयन्नात्मकान्ताम् ॥

वीणावेणुक्कणितमिलितस्त्रैणगानेन भिन्नो
(ना)नावाद्यध्वनिरतिघनो भक्तलोकैरुदीर्णैः।
स्तोत्राघोषैः प्रियसख! तदा पूरयिष्यत्यलं ते
कर्णौ घूर्णत्तरजलनिधिध्वानभङ्गप्रदायी ॥ ४९ ॥

तस्मिन्नेव प्रविश समये चन्द्रचूडालयं तं
नानाश्चर्यप्रभवमभितस्सञ्चरद्भक्तलोकम् ।
यत्रोपेतः सुखमतितरामन्तरुद्भासमानं
ब्रह्मानन्दप्रतिममनिशं निर्विशत्यङ्ग! लोकः ॥ ५० ॥

दानासक्तभ्रमरनिकरं कर्णतालेन दूरे
पर्यस्यन्तं कथमपि शनैर्हस्तिपैर्नीयमानम् ।
तुङ्गाभोगं करिवरमलंकुर्वदासक्तभूषं
गौरीभर्त्तुर्बलिमहविधौ तत्र दृश्यं स्वरूपम् ॥ ५१ ॥

छत्रे स्थित्वा तदनु भवता लम्बमुक्ताकलापे
सेवा कार्या हिमगिरिसुतावल्लभस्यादरेण ।
तस्मिन् पश्यन् कनकमुकुटाभोगभाजं भवन्तं
देवः प्रीतो झटिति भविता चक्रवाकाधिराज! ॥ ५२ ॥

रम्ये तस्मिन् विरमति महे सेवनोद्युक्तचित्तै-
र्लोकैः सार्द्धं कृतकलकलैर्याति गेहं गिरीशे ।
पश्चादेव प्रविश निलयाभ्यन्तरं सप्रियस्त्वं
सम्मर्दोऽस्मिन् जगति हि सखे! सर्वलोकाविषह्यः ।५३॥

अम्भोजाभां चरणयुगले[१] श्रोणिदेशे च कृत्तिं
चित्ते तावद् गुरुतरकृपां कण्ठकाण्डे गरं च ।

१. 'चरणतलयोः' इति च पाठान्तरम् ।

अम्भोजाभां वदनकमले के जटाश्चापि बिभ्रत्
कान्ताकान्तं जयति भवतो रूपमेतत् स्मरारे ! ॥ ५४ ॥

स्तुत्वा चेत्थं तदनु सरसः सुन्दराख्यस्य मध्यं
भूयो गत्वा सह दयितया पङ्कजैर्लोभनीयम् ।
आतन्वानो नवबिससमास्वादनं प्रीतिमान् स्या
मुक्तेः कालः खलु खगपते ! देवसेवावसाने ॥ ५५ ॥

तस्माद् व्योम्ना पतग ! पततादञ्जसा तावदेतां
तां विश्लेषादिव हि रुदतीं प्रोच्चलद्भृङ्गनादैः ।
रम्याकारां सरसिजवनीं पृष्ठतः पश्यतस्ते
किञ्चित् खेदो नियतमुदियान्मानसे दीनबन्धो ! ॥ ५६ ॥

सारामारात् तदनु नगरी कापि लक्ष्या पुरस्तात्
सारामारा जगति नितरां भासुराणां पुरीणाम् ।
सारा मारातुरयुवजना सञ्चलद्रत्नकान्त्या
सारामारा जितहरिसुखामर्त्यधामोल्लसन्ती ॥ ५७ ॥

नैवोद्यानं सुरतरुचितं यत्र वृन्दं च यूनां
नैवामात्या ह्यनलसदृशो रत्नभाभिर्गृहाश्च ।
नो योद्धारः परमसिचयोद्भासिताः किञ्च योषा-
स्तल्पौघो नो मृदुलसितगुः किन्तु केलीशुकोऽपि ॥ ५८ ॥

मन्दं यात्यः सततमधिकं श्रोणिदेशे महत्यः
काञ्चीमत्यः पृथुकटितटे कुङ्कुमं लिप्तवत्यः ।
शोभावत्यः प्रतिगलतलं हारजालैः सुदत्यः
सन्मालत्यश्चिकुरनिचये भान्ति यस्यां युवत्यः ॥ ५९ ॥

तामेवैतां प्रियसख! सचन्द्राभिधां राजधानीं
जाले जाले विहरदबलावृन्दविद्योतिसौधाम्।
कालोन्मीलत्कुवलयदलाभोगका(कैः ? न्तैः) कटाक्षै-
रेणाक्षीणां क्षपितदिवसां सावधानं समेहि ॥ ६० ॥

वापीं वापीं परि परिलसत्पङ्कजां कान्तयामा
गाहं गाहं बिसमुदरपूरं चरन्नादरेण।
प्रत्युद्यानं तरुषु निविशन् मानयन् देवदर्शं
रम्यानन्यानलमधितटं लोकयन् सञ्चर (त ? स्व)म् ॥ ६१ ॥

आकृष्टात्माप्यधिकमहितैर्वस्तुभिस्तत्र तैस्तै-
र्मद्वैवश्यं मनसि कलयन् निश्चितं यास्यसि द्राक्।
लोकानां यद् विधुरितधियां सौम्य! सन्मार्गयायी
मोदं कर्तुं वहति हि रतिं नेन्द्रियाणां निजानाम् ॥ ६२ ॥

यो वा खेदस्तव नयनयोस्तत्र दृश्यान् विशेषां-
स्त्यक्त्वा भ्रातर्नभसि पततो मत्प्रियायोद्यतस्य।
आरादग्रे भुवनविदितं देवधामातिहृद्यं
सर्वोत्कृष्टैर्निजगुणगणैस्तं विनेष्यत्यवश्यम् ॥ ६३ ॥

गोकुल्यालीभरणनिरतो भूधरश्रेष्ठधामा
शश्वद्दीक्षासुहितवसुदेवोऽप्युमाकान्तिदेहः।
भक्ताक्रूरः सरसकमलोपाश्रितो भद्रबाहः
कृष्णो यस्मिन्नवति सततं प्रोल्लसच्चन्द्रकाभः ॥ ६४ ॥

शान्ताकाराभिधपुरवरे तत्र सन्दृश्यमाने
तस्योत्कृष्टैः खगवर! गुणैराहृतात्मा ननु स्यात्।

प्राप्तुं चैतत् कुतुकभरतः सत्वरं गच्छतस्ते
तद्धामेतस्सरदिति पुरा जायते भ्रान्तिरेका ॥ ६५ ॥

त्वज्जातीयैर्विहगमिथुनैः कृत्रिमैर्बर्हिणाद्यै-
रन्यैश्चापि प्रियसख ! परं भासुरे गोपु(र ? रेऽ)स्य ।
तेषां मध्ये त्वमपि समुपेत्यास्थितश्चेत् त्वदीया
कान्ता तावत् तरलहृदया नूनमीर्ष्याकुला स्यात् ॥ ६६ ॥

चाम्पेयाद्यैः कुसुमतरुभिर्भासमानं समन्ताद्
देवोद्यानं लसति सविधे तस्य नैःश्रेयसाभम् ।
तत्र क्वापि क्षणमयि सखे ! कोक ! विश्रम्य पश्चाद्
देवं द्रष्टुं प्रविशतु भवानेतदीयालयान्तम् ॥ ६७ ॥

श्रावं श्रावं श्रवणसुभगं स्तोत्रवाकं जनानां
मन्दं मन्दं परिसरभुवं प्राप्य भक्तैकबन्धोः ।
लोलम्बाभं जगति नितरां मोहनं तत्स्वरूपं
दर्शं दर्शं पुलकिततनुस्तत्र किञ्चिन्निषीद ॥ ६८ ॥

रक्ता गोपीरनुविहरणं सूर्यजान्तेन चक्रि
निप्रभ्रन्तं समसुरजितां सातयं नेमिपङ्क्तेः ।
नीलाम्भोदात् प्रति परि कचं मेचकं वावर्हि त्वां
सेवेऽरूपं कपटपशुपाकार ! कारुण्यशालिन् ! ॥ ६९ ॥

एवं तावत् कृतहरिनुतेस्तत्पुरस्तस्थुषस्ते
भक्त्या पूर्णं हृदयकुहरं नेत्रमानन्दबाष्पैः ।
भक्तैरुक्तैः श्रवणयुगली तच्चरित्रैर्विचित्रै-
र्नासापि स्यात् तदुरसि लसद्दिव्यमालासुगन्धैः ॥ ७० ॥

भ्रातः! श्रीमन्नथ मुररिपौ भक्तिभारं वहन्तं
निर्गच्छन्तं कथमपि नमत्कन्धरं बन्धुरं त्वाम् ।
उद्यद्रागा मणिगृहसरत्कान्तिबाहालताभि-
र्दीव्यन्तीभिः क्षणमिव पुरी रोद्‌धुकामेव सा स्यात् ॥ ७१ ॥

कालाम्भोदैः शिशिरिततरक्षेत्रभूम्यन्तरालान्
कांश्चिद् देशान् बहलकलमश्यामलान् कोमलाभान् ।
उल्लङ्घ्यातः किमपि सरतः सम्पतेदीक्षणं ते
रम्याख्यायां सरिति हृदयं मोदसिन्धौ च तावत् ॥ ७२ ॥

चातुर्वैद्यं पठिति सकलेऽप्यागमे यायजूकं
धर्मं प्राज्ञं बहुविधमलं नित्यमार्च्चं मुकुन्दम् ।
दीने संरक्षिति सिमजने धारयं सद्धिजन्म
ब्राह्मण्यं तत्त्वविरतमवाकृतारमास्ते हि यस्याः ॥ ७३ ॥

भूदेवानां समयविहितस्नानपुण्याम्बुपूरा
तत्सन्तानैरधिकरुचिरैर्व्याप्तवप्रप्रदेशा ।
पर्यन्तोद्यत्स्फटिकसुषमासङ्गतः शुभ्ररूपा
गङ्गादेश्या जयति धरणीमण्डले या नितान्तम् ॥ ७४ ॥

सेयं तावत् कपिशरुचिमत्कर्णिकादीप्रदीप-
ज्वालायुक्ता कमलरजतामत्रकं सन्दधाना ।
लाजोत्क्षेपं जलकणमिषात् कुर्वती चोर्मिजालै-
रुत्तुङ्गैः स्याद् विहग! भवतोऽभ्युद्गमायोद्यतीव ॥ ७५ ॥

सम्भूताया जगति विदिताद् भूधराद् रत्नकूटात्
सम्प्राप्तायाः पतिमतितरां पावनं वारिराशिम् ।

क्षोणीदेवैरधिकमहितैः सन्ततं संश्रिताया-
स्तस्यास्तीरे क्वचन वसतिः साधु कार्या भवद्भ्याम् ॥ ७६ ॥

किञ्चिन्मार्गं तत्र खलु ततः कोक! शक्यं प्रयातुं
प्रागेवास्ताचलगमनतः पद्मिनीनायकस्य ।
स्वैरं वस्तुं तत इह चिरं नैव काङ्क्षा हृदि स्यात्
कार्योत्साही त्रिजगति जनः को नु वा स्वस्थचेताः॥ ७७ ॥

चक्राकारैः कृततटतरुव्रातभङ्गैर्नभोगै-
र्हूहूशब्दैर्बधिरितदिशामण्डलैश्चण्डवातैः ।
अत्यासारैरपि च नितरां दुर्गमं व्योममार्गं
तस्यास्तीरात् प्रविशतु भवान् दक्षिणात् पक्षिराज!॥ ७८ ॥

गर्जन्त्युच्चैर्वनकरिघटाबृंहितैर्नीलनीला
तापच्छेदं सकलजगतां कुर्वती सर्वदापि ।
वाताधूता प्रमदनिनदत्केकिलोकाभिरामा
सारण्यानी जलदपटलीलोभनीया ततः स्यात् ॥ ७९ ॥

कुम्भिव्रातभ्रमणविचलत्कुम्भिनी भूरुहाग्र-
भ्रान्तादभ्रभ्रमरनिवहभ्राजमानाभ्रभागा ।
जृम्भाशुम्भत्ककुभसुरभीभूतदिक्चक्रवाला
गम्भीराम्भःपतननिनदा या विभात्यद्भुताभा ॥ ८० ॥

कुञ्जे कुञ्जे ललितलवलीसङ्गदीर्घ्यत्तमाले
नीलाभोगान् निजतनुलसच्छद्मभूषाविशेषान् ।
ज्ञातुं मूढाः शबरवनिता रन्तुकामाः स्वकान्ता-
नास्पृश्याहो स्मरविकृतिभिः कोक! जानन्ति यस्याम्
[॥ ८१ ॥

मार्ग्यां पङ्क्तौ शबरसमुदायाः सपत्राकृतायां
संस्कुर्वन्ति द्रुतमुपतटं यत्र चादित्सयास्याः ।
लोकेष्वेषु ग्रहिलहृदयं ह्यामिषे पौरुषेयं
किञ्चासक्तिं किमिह कथये मांसिकानाममीषाम् ॥ ८२ ॥

तत्रात्मानं वनचरकुलात् पाक्षिकात् पातुमस्मा-
दूर्ध्वे तावन्निपत न पतेद् यावदेतच्छरौघः ।
लोके धीमानिह तु विपदं भाविनीं प्रेक्षमाणः
सम्यक् पूर्वं नहि वितनुते किं प्रतीकारमस्याः ॥ ८३ ॥

क्षोणीपृष्ठे गिरिवरकुलं मौष्टमत्युच्चशृङ्गं
तुल्याः पूर्णा अपि च सरितो नूनमेकावलीभिः ।
वृक्षाकीर्णां भुवमपि तथा श्यामपत्रावलीकां
दृष्ट्वा तावत् तव तु भविता विस्मयः कोऽपि भूयान् ॥ ८४ ॥

आलेख्याद्यैरधिकरुचिरैर्गोपुरं रम्यरूपं
विख्यातस्य त्रिपुरजयिनो लोकभद्रस्य धाम्नः ।
पश्यन्तं त्वां धरणिमखिलां यान्तमप्येवमुच्चै-
रग्रे रोत्स्यत्यतिगतिपटुः को नु तुङ्गात्मनः स्यात् ॥ ८५ ॥

तस्योपान्तं सरति भवति स्वर्णवर्णाङ्ग! तावत्
कालस्तु स्याद् दिनपरिणतेः प्राङ् मुहूर्तावशेषः ।
तस्मात् क्षिप्रं मदनदमनं स्तोतुमन्तः प्रविष्टो
दर्शं दर्शं भुवनमहितं रूपमस्यास्स्व पार्श्वे ॥ ८६ ॥

वह्निं सप्तार्चिषमपि तथा वेधसं सप्तसाम-
स्वाध्यायातिप्रसितमजितं सप्तलोकैकपालम् ।

देवं तद्वत् कमलसुहृदं सप्तसप्तिं च दृष्ट्वा
गौरीजाने! त्वमपि सततं सप्तमूर्धासि नूनम् ॥ ८७ ॥

कैकौकोकत्ककककक्मोकंककुत्कंककंकुत्
तातन्तत्त्वत्तातितृतिततं तान्ततान्तन्तु तान्तम्।
नूनन्नानाननन्नूनिनीनानन्नूनतुन्नं
मन्मुन्मूनामनुमनुमिमनामनेन्मन्मनानूम्(?) ॥ ८८ ॥

संस्तुत्यैवं हरमथ कथं यामिनीदुर्दशेयं
नेयेत्यन्तः कलयति भवत्यास्थिते गोपुराग्रम्।
यास्यत्यब्धिं रविरपि पयोदावृतस्तोयपूरे
मग्नां दृष्ट्वा सरसिजवनीं खिन्नचेता इवाहो ॥ ८९ ॥

स्वीयं नीडं प्रति परिपतत्पत्त्रिनानानिनादै-
र्मा मा मानं मनसि भजतेत्येवमावेदयन्ती।
चारुश्रीमन्निजमुखलसन्मालतीमन्दहासा
दूतीव स्याद् घटनचतुरा मानिनां सापि सन्ध्या ॥ ९० ॥

पौरस्त्यायां तदनु ककुभि प्रोद्गतास्ते क्रमेण
प्राप्तोत्कर्षास्तिमिरनिकरा हन्त दृश्या भवेयुः।
सूर्यं रोद्धुं प्रथममुदिता ये घना व्योम्नि तेषां
साहाय्यार्थं पुनरुपगताः कालमेघा इवान्ये ॥ ९१ ॥

पश्यन्ती त्वां विरहमचिराद् भाविनं चिन्तयन्ती
सन्तापार्त्ता वपुषि भवतो गाढमालीयमाना।
सैषा मुग्धा विहग! सहसा वल्लभागोचराक्षणो-
स्तावत्तु स्यान्निबिडतिमिरव्रातरोधादिवाहो। ९२ ॥

कालाकारैर्मुदिरशबरैर्मुक्तधाराशरौघैः
कीर्णे पूर्णे घनतटतमःकुञ्जरैरञ्जनाभैः ।
खद्योतालीकुसुमविलसद्व्योमकुञ्जान्तराले
तस्मिन् सम्यग् वपुरव सखे! यामिनीकाननान्ते ॥ ९३ ॥

रात्रिं दीर्घामतिगमयता विप्रयोगात् कथञ्चित्
प्राच्यां प्रेक्ष्यस्तदनु भवता कोऽपि कान्त्युद्गमः स्यात् ।
हर्षोत्कर्षान्निजपरिसरे कान्तमालोकयन्त्या-
स्तस्या मन्दो हस इव तदा व्याकुलाम्भोदकेश्याः ॥ ९४ ॥

आशास्वम्भोधरमलिनितास्वासु साधु प्रसादं
कर्तुं नालं रविरिह तथाप्यङ्ग! चित्ते त्वदीये ।
कर्तात्यन्तं खगवर! परं यामिनीषु प्रकाशं
क्षीणश्चन्द्रो ननु वितनुते नो त++रवेहि ॥ ९५ ॥

अभ्यागच्छ द्रुतमिव समालोकय प्रेमगर्भं
ब्रूहि श्रोत्रद्वयसुमधुरं श्लिष्य गाढाङ्गसङ्गम् ।
प्रातर्दृष्टं पतगवृषभ! प्राणनाथा भवन्तं
हर्षोद्रेकादिति सुखयिता विप्रयोगातिखिन्नम् ॥ ९६ ॥

एवम्भूतां प्रियसहचरीं प्राप्य मोदाकुलात्मा
मा मा कालं क्षपय सुचिरं गोपुरे तत्र रम्ये ।
तापः क्षीणो मनसि युवयोर्विप्रयोगेण जातो
यावत् तावत् त्वरितमनया सार्द्धमस्मात् प्रयाहि ॥ ९७ ॥

भूयस्तूर्णं नभसि पतता दूरतो दक्षभागे
द्रष्टुं शक्यं नियमितधियामाश्रमं तन्मुनीनाम् ।

चक्रेणापि द्विजकुलपते! वर्त्मना तन्निषेव्यं
चित्ते काङ्क्षा भवति यदि ते जन्मसाफल्यमाप्तुम् ॥ ९८ ॥

एतत् सर्वं जगदसदिति प्रेक्ष्य सङ्गेन हीना
स्तीर्थस्नानैरपगतमलाः सन्निषण्णाः सुखेन ।
मन्दं मन्दं विजितपवना रुद्धसर्वेन्द्रियेहा
रम्याकारे भगवति परे मानसं योजयन्तः ॥ ९९ ॥

प्रत्यङ्कं तद्वपुषि मनसः स्थैर्यमापादयन्तो
ध्यातृध्येयद्वितयरहिताः शश्वदानन्दमग्नाः ।
स्थूणादण्डप्रतिमतनवः पश्यतां सज्जनाना-
मत्याश्चर्यं हृदि विदधतो यत्र दृश्या मुनीन्द्राः ॥ १०० ॥

शान्तानेतानथ मुनिवरान् वन्दितुं काङ्क्षमाण-
स्तत्रोपेतः सपदि महतां सङ्गमेनैव तेषाम् ।
भ्रातर्मा भूस्त्वमपि सुतरां निर्ममो मत्प्रियार्थी
सन्तस्तावन्निजपदजुषः कुर्वते मुक्तसङ्गान् ॥ १०१ ॥

तान्तां तां तां हृदि दधदसूनां कथञ्चिद्विलम्ब्या-
ध्वाना नानाविधमृगपरीतादितस्तान् प्रणम्य ।
याया यायावरपरिवृतात् प्रार्थयन् विश्वनाथा-
न्मा मा मामादपरविषये चित्तवृत्तिर्ममेति ॥ १०२ ॥

मुग्धाक्षीभिर्द्युतिजिततमालोकनेत्राभिरामं
नित्यं शोभामथ जनहितालोकनेऽत्राभिरामम् ।
क्षत्रारातिं खलु जितवता लोकनेत्राभिराम-
क्षेत्रं पातञ्जयति नमतल्लोकनेत्राभिरामम् (?) ॥ १०३ ॥

शान्तस्वान्तः प्रविशतु पुरीमाशु रामाभिरामां
नाम्नाप्येतां प्रियसख! भवान् भूतिभिर्बह्वयोध्याम् ।
(स?स्व)प्रेयस्या पतग! भवता जातिवैरीति रामः
सोऽयं सेव्यो नहि न कुपितोऽपि प्रभुः सेवनीयः ॥ १०४॥

तोतोतोतोददददददस्यावतीर्णस्य ते वै
यायायायाजजजजजजल्पास्तपौलस्त्य! भाति ।
स्यास्यास्यास्याममममममत्वं कृते विस्मृतिर्मे
मामामामानिनिनिनिनिनिनित्यं सुखस्य त्वदङ्गे ॥ १०५॥

रामाक्षिप्ताशरभ! समरक्षारते! भक्तचित्त-
ध्वान्तेभालीशरभ! समरप्रोल्लसद्बाहुवीर्य! ।
पूर्णानम्राश! रभसमरं नाशयन् वैरभाजां
राजत्तूणीशर! भसमरस्याभहाशानतोऽस्मि ॥ १०६ ॥

एतादृग्भिः स्तुतिपदसुमैरर्चयित्वा रघूणां
नाथं रामं जनकतनयारम्यवामाङ्कभागम् ।
कांश्चिद् देशान् बहुलविभवाल्लंङ्घितस्यातिदूराद्
द्रष्टव्यः स्याद् विततविटपः कश्चिदश्वत्थशाखी ॥ १०७॥

नत्वा मूर्त्तित्रयमयममुं दूरतो भक्तिपूर्वं
गत्वोपान्तं द्विजवर! परीयाः पुनः सप्तकृत्वः ।
मा मा शाखामधिवस सखे! लोभनीयां तदीयां
सोऽयं सर्वैरपि शनिदिनेष्वेव संस्पर्शनीयः ॥ १०८ ॥

सेवामेवं किल हितकरीं वृक्षराजस्य कृत्वा
किञ्चिन्मार्गं पुनरपि ततो गच्छतस्ते पुरस्तात् ।

नीलच्छायः परिणतफलैः कोऽपि जम्बूतरुः स्यात
तस्य स्कन्धं सरसमनयाध्यास्स्व मध्याह्नकाले ॥ १०९ ॥
आस्वाद्यैतत्फलमतितरां स्वादु ताम्बूलवल्ली-
राजत्केरक्रमुकनिबिडं दीर्घमुल्लङ्घ्य मार्गम् ।
पूर्णानन्दाभिधमथ भवान् दक्षिणेनोपपद्यं
द्रष्टा भूमीवलयतिलकं भूतनाथस्य धाम ॥ ११० ॥
सम्प्राप्यैतन्निलयनमथो सादरं देवमेनं
नत्वैवास्माद् व्रज यदि भवेदप्यहो यानमान्द्यम् ।
सेव्यासेवा जगति हि परं रोधिनी कार्यसिद्धेः
सर्वेषां स्याद् द्विजवर! यथा प्राग् दिलीपस्य राज्ञः
[॥ १११ ॥
अम्भोदालीसुभगसुषमं पात्रिकश्रोत्रपाशं
शश्वद्बाणासनशरवरोद्दीप्यमानाग्रहस्तम् ।
वेद्यत्वेन श्रुतिशतगिरामार्य! निश्चप्रचं तद्
भूयो भूयो मनसि भवतो रूपये रूपरूपम् ॥ ११२ ॥
स्तुत्वा चैवं पुनरवनतस्त्वञ्चञ्जलं तत्र बद्ध्वा
निर्गम्यास्माद् द्रुततरमथो याह्युदक्पश्चिमां त्वम् ।
तावल्लक्ष्या विटजनमनोनन्दिनी वेशवाटी
वेषं कर्तुं वरवधुजनैराश्रितालिन्दभागा ॥ ११३ ॥
कल्याणाङ्ग्यः कलितचिकुराः कज्जलोल्लासिवीक्षा-
कल्माषश्रीकलनविलसत्कर्णिकाभातगण्डाः ।
कर्पूराभाकमनहसिताः कल्यवाणीनिगुम्फाः
कम्बुग्रीवाः कनककलशीकल्पवक्षोजभाराः ॥ ११४ ॥

कञ्जश्रीमत्करतलयुगाः कङ्कणोद्यत्प्रकोष्ठाः
कक्ष्यादीप्राः कचितचरणाः कर्दमैर्यावकानाम् ।
कन्दर्पाभैः कमितृभिरमा कल्पितानेकलीलाः
कर्तारस्ते कमलनयनाः कम्रभासोऽत्र मोदम् ॥ ५ ॥

तत्र स्थित्वा क्षणमनुभवन् वारवामेक्षणानां
विद्युल्लेखासुषमवपुषां विभ्रमान् विश्वरम्यान् ।
विश्रान्तस्त्वं विहग! विविधाश्चर्यपूर्णां पुरीं तां
प्राप्तुं तावद् विचल न विशेद् यावदस्तं विवस्वान् ॥ ११६ ॥

उद्यानाद्यैरुरुतरगुणैर्भासमानां ततस्तां
दूरे दृष्ट्वा नयनसुभगां पत्रिचूडामणे! त्वम् ।
मोक्ष्यस्यध्वश्रममतिलघुप्रेक्षितप्राप्तिमार्गे
प्राप्ये देशे भवति हि सुखी पान्थलोकोऽत्र लोके ॥११७॥

माध्वीमाद्यत्पिकमृदुगिरां विभ्रमैर्मोहनत्वा-
दत्यन्तोद्यद्रतिहिततया माधवेनोषितत्वात् ।
सौराज्येनाप्यनुदिनमहो हीनसान्तापिनत्वात्
कामारामाह्वयमभिदधात्यन्वितार्थं जनोऽस्याः ॥ ११८ ॥

पुञ्जीभूतैः कनकवरणोद्दामकान्तिप्ररोहै-
रालिप्तत्वाद् द्विगुणिततरस्वीयरूपप्रभेण ।
एषा तावद् विहग! भवताविश्यतां राजधानी
स्वान्तर्धामस्फुरितदनुजारातिधामोज्ज्वलश्रीः ॥ ११९ ॥

आसीद् विप्रो हरिनतिरतः कोऽपि रम्भाविहारे
विष्णुत्रातो द्विजपरिवृढब्रह्मदत्तैकमित्रः ।

तेनैतस्मिन् सपदि रचिते कोकसन्देशकाव्ये
पूर्णस्तावत् समजनि रसैश्चाप्यसौ पूर्वभागः ॥ १२० ॥

पूर्वभागः समाप्तः ॥

---

## अथोत्तरभागः ।

श्रीवत्साङ्कः स्वयमिव सदानन्तभोगोपशोभी
स्वैरासेव्यः सकलजगतां लोचनानन्ददायी ।
उत्तुङ्गात्मा त्रिविधसुमनोमण्डलीनन्दनीयो
यस्यां पुर्यां लसति सुतरां सर्वतः सौधसङ्घः ॥ १ ॥

यत्सौधाग्रे युवजनमनोहारिरूपामृतानां
केलीभाजां कुवलयदृशां चारुतावीक्षणेषु ।
व्रीलाभारात् त्रिदशवनिताः स्वां तिरस्कारविद्यां
कर्त्रे धात्रे विदधति चिरायाञ्जलिं मौलिदेशे ॥ २ ॥

स्वैः स्वैर्दारैः सह विहरतो यत्र यूनः प्रहर्तुं
तेषां तावत् सुषमवपुषां सन्निधिं सम्प्रविष्टम् ।
वेत्तुं तावन्निजपतिमिहापारयन्ती रती सा
जानात्यद्धा कथमपि करे कार्मुकं प्रेक्ष्य पौष्पम् ॥ ३ ॥

यत्सौधालीविहरदबलानेत्रलीलावलोका-
ल्लज्जानम्रे गतवति मृगे क्वापि चोत्सङ्गलीने ।
रोहिण्याद्यास्तदनु रमणस्याङ्ककेलीविशेषै-
रामोदन्ते प्रतिकलमहो प्रेमभारप्रणुन्नाः ॥ ४ ॥

कान्ताकारा निखिलनगरीरप्यधःकृत्य चोर्ध्वं
तिष्ठन्तीं तां सुरवरपुरीं सन्ततं शोभमानाम् ।
दृष्ट्वा यासावुपगतरुषा तज्जयायैव नूनं
सौधोत्सेधैर्गगनपदवीं दूरमुल्लङ्घितास्ते ॥ ५ ॥

कन्दर्पेण प्रगुणधनुषा प्रेरितानां निशायां
सङ्केतं प्रत्यधिकनिभृतं कामिनीनां गतानाम् ।
प्रातःकाले कचभरमिलत्पुष्पसौरभ्यलोभ-
भ्रान्ता सम्यग् भ्रमरपटली यत्र मार्गं व्यनक्ति ॥ ६ ॥

यस्यां नीलोपलवलभिकारङ्गदेशे नटीनां
नृत्यन्तीनां निजपरिजनैश्चालिता चामराली ।
सान्द्रे तावन्मुरवनिनदे मेघनादभ्रमेण
प्रोद्गच्छन्ती प्रतिसुरपथं हंसपालीव भाति ॥ ७ ॥

उद्यद्दीपे नवमणिरुचा रोचिते केलिगेहे
नीवीबन्धत्रुटनरसिके प्राणनाथे निशायाम् ।
लज्जाभाराद् विधुरमनसां यत्र मुग्धाङ्गनानां
काञ्चीनीलोपलरुचिरहो किञ्चिदाश्वासहेतुः ॥ ८ ॥

वर्षारम्भेष्वमरसरितं यातुमुड्डीयमाना
भूयोऽपि क्ष्मां शरदुपगमेष्वापतन्तो मरालाः ।
आकर्ण्याहो रणितमबलानूपुराणां यदीये
सौधोपान्ते निजकुलरवभ्रान्तिमन्तो वलन्ते ॥ ९ ॥

यान्त्यः स्वैरं रमणवसतिं वारयोषा निशायां
नारीरूपास्वपि पुरुषरूपासु पाञ्चालिकासु ।

सत्यभ्रान्त्या तरलितधियो राजमार्गेषु यस्यां
नुन्नात्मानः स्मरशरशतैराप्रभातं भ्रमन्ति ॥ १० ॥

दग्धे पूर्वं त्रिपुरजयिना मन्मथे तस्य ताव-
च्चापो मौर्वी नलिकयुगली सायकाश्च क्रमेण ।
यत्रत्यानां सरसिजदृशां भ्रूलता रोमराजि-
र्नासा वीक्षाविलसितमितिच्छद्मनाङ्गेषु लीनाः ॥ ११ ॥

यत्सौधाग्रे मुरवनिनदं नृत्तवेलासमुत्थं
श्रुत्वाकाण्डे सुरपुरनदीसुस्थिता हंसपाली ।
अम्भोदालीघनरवधिया जातसन्तापभारा
हा हन्तास्ते चकितचकितं प्रेक्षमाणा दिगन्तम् ॥ १२ ॥

यत्र क्रीडामृगशिशुमुपादाय नारीस्तदीयां
वीक्षाभङ्गीं नयनसविधं प्रापयित्वेक्षमाणाः ।
पश्यन्निन्दुर्वदनकमले सोऽयमासां लगेच्चेद्
वक्त्रौपम्यं त्वहमिह लभेयेति वाञ्छां दधाति ॥ १३ ॥

यत्रस्थाभिः किल युवतिभिर्यानभङ्ग्या निरस्ता
हंस्यो वर्षास्वमरसरितं सङ्गताः सम्यगेताम् ।
अभ्यस्याथो शरदुपगमे प्राप्य भूयोऽपि भग्ना
योग्यां कर्तुं ध्रुवमथ नभोमासि तामेव यान्ति ॥ १४ ॥

यद्वापीषु स्फुरितकमलैरुज्ज्वलास्वङ्गनानां
खेलन्तीनां विमलसलिले बिम्बितान्याननानि ।
मूलोच्छेदं युगपदखिलाम्भोरुहाणां विधातुं
बिम्बानि स्वान्यमृतरुचिना कल्पितानीव भान्ति ॥ १५ ॥

यस्यां सङ्केतितकुसुमवाटीसदेशं समेताः
सारङ्गाक्ष्यस्तदुदरसमासीनहंसीनिनादम् ।
श्रुत्वा कस्याश्चन चलदृशो मञ्जुमञ्जीरशिञ्जे-
त्याशङ्कयेर्ष्याजडिमपरितापाभिभूता भवन्ति ॥ १६ ॥

यस्यां केलीशुकवरशिशुं मञ्जुवाणीषु सौक्ष्मीं
वाचोभङ्गीमधिककुतुकं शिक्षयन्तीषु तावत् ।
एतत् स्त्रीणामिदमिह शुकस्येति सम्यग् विविच्य
ज्ञातुं वाक्यं नहि निपुणता शृण्वतां जायते हि ॥ १७ ॥

यत्रत्यायां स्फटिकधरणौ बिम्बितः शीतभानुः
क्रीडन्तीनामिह मृगदृशां निर्जितो वक्त्रबिम्बैः ।
भूयोऽप्येतत्परिभवसमाशङ्कया नूनमासां
पादाम्भोजे प्रणमनाविधिं वीतगर्वः करोति ॥ १८ ॥

यस्यामास्याम्बुजपरिसरं कीरमादाय नीत्वा
तन्वानानां गिरि कुशलताशिक्षणं कामिनीनाम् ।
बिम्बभ्रान्त्या सरसमधरं चञ्चुना संस्पृशन्तं
पश्यन्तस्तं जननमदसीयं विटाः कामयन्ते ॥ १९ ॥

यस्यामिन्द्रोपलविरचितां नर्तकीनां मुखेन्दु-
ज्योत्स्नायोगाद् विगलदमलाम्भोभिरिन्दूपलौघैः ।
दीव्यन्नीप्रां मुरजमुखरां नृत्तशालां समेत्य
प्रावृड्भ्रान्त्या भवनशिखिनस्तन्वते ताण्डवानि ॥ २० ॥

लावण्यं तद् वपुषि सुदृशां यत्र कान्तानुवृत्तौ
प्रावीण्यं वा बहुविधकलास्वद्भुतं कौशलं च ।

इत्येकैकं त्रिदशवनिता यद्यहो लक्षयेयुः
  स्वीयं सर्वं गुणगणमहोदीपवत् कल्पयेयुः ॥ २१ ॥

यत्र त्रैवर्णिकसमुदयः स्वर्गलोकाभिलाषी
  यज्वा (प)श्चादधितद(?)मुपागम्य भोगानुभूतौ ।
तांस्तानस्यास्तदतिशयितान् सार्वकालं गुणौघान्
  स्मृत्वा स्मृत्वा स्पृहयति पुनर्जन्मनेऽत्रैव नूनम् ॥ २२ ॥

नानारत्नप्रवररचितारामसोपानवेदी-
  सालक्रीडाशिखरितलिमालिन्दकुड्यावलीका ।
यासौ चामीकरमयसदोगोंपुराट्टालहर्म्या
  यक्षेशं तं गतधनपतित्वाभिमानं तनोति ॥ २३ ॥

मध्येव्योम ग्रसितुमुडुपं संप्रवृत्ते तु राहौ
  यत्सौधाग्रे विहरदबलावक्त्रबिम्बानि दृष्ट्वा ।
तद्विज्ञाने परमकुशले तत्र बम्भ्रम्यमाणे
  ग्रासाभावाद् गणकनिवहा हन्त हास्या भवन्ति ॥ २४ ॥

यस्यामिन्दुः प्रसृमररुचिश्चन्द्रशालासु यातो
  बालैः केलीतरलहृदयैः कन्दुकक्रीडनाय ।
आत्तो नूनं गगनपदवीमध्यमध्यासितोऽसौ
  नित्यं तावत् किमपि गमने मन्दतामभ्युपैति ॥ २५ ॥

ज्योत्स्नावत्यां स्फटिकरचिते राजमार्गे निशाया-
  मुद्यद्रागं विहितसमया गौरवासोविभूषाः ।
तामस्यां वा हरिमणिमये नीलवेषाश्च तद्वत्
  सारङ्गाक्ष्यः सह युवजनैर्यत्र नित्यं रमन्ते ॥ २६ ॥

यस्यां चित्रास्थितवरवधूः प्रेक्ष्य सत्यभ्रमेण
प्राप्योपान्तं प्रकृतिसरसं भाषमाणा वचांसि ।
प्रत्युक्तीनामनुदयवशात् तासु तावद् विलक्षा
बोभूयन्ते बत विटजनाः शिल्पिलोकापहास्याः ॥ २७ ॥

उत्तुङ्गानामधिकमहसां रत्नसौधावलीनां
*मध्यं ग्रीष्मे समुपगतवान् यत्र मध्यन्दिनेऽपि ।
एतत्तेजःप्रमुषितरुचीसञ्चयत्वेन तावत्
खद्योताभामहिमकिरणो नूनमूरीकरोति ॥ २८ ॥

यो वा खेदो हृदि खलु नृणां रूपलावण्यभूम्ना
विख्यातानां त्रिदशसुदृशां लोचनागोचरत्वात् ।
यद्वास्तव्यास्तदधिकगुणाः पश्यतां पङ्कजाक्षी-
स्तेषां तावत् स खलु तरसा हन्त दूरं प्रयाति ॥ २९ ॥

विश्वोत्कृष्टो विविधरचनाभङ्गिभेदो यदीयः
सम्पद्भूमापि च सुरपतेः किन्नराणां च नेतुः ।
पुर्यां या वा बहुमतिरिह प्रौढवाक्यप्ररूढा
नृणामेतामधिकविरलामादधाते बतै(ते ? तौ) ॥ ३० ॥

प्रत्यग्राम्भोरुहसुरभिलं सर्वलोकाभिरामं
स्निग्धापाङ्गं विलसदलकं सद्द्विजालोकनीयम् ।
यस्यां तावत् कमलवदनावक्त्रबिम्बं सरो वा
तुल्याभोगं भृशपरिलसच्चन्द्रकान्तं विभाति ॥ ३१ ॥

* 'यत्रत्यानां परिसरगतः शारदे वासरेऽपि ।' इत्यपि पाठः.

वातोद्भूतः कपिरिव सदारामसेवानुरागी
दैवः पन्था इव बहुलसत्तारकालोकरम्यः।
कंसारातेः कच इव कलापालिविद्योतमानो
योषित्सङ्घः सुमहितरुचिर्भासतेऽलीव यस्याम् ॥ ३२ ॥

यस्यां चञ्चत्कुवलयदृशां कामिनीनां कदम्बं
घोराकारं वनमिव परं सर्वदारूपशोभि।
अम्भोजन्मद्विषदुपलसत्कान्तिपूरानुषक्तं
वापीतीर्थं मन इव चकोराङ्गनानां च भाति ॥ ३३ ॥

यस्यां राजा सुविहितविपक्षासनः कृष्णतुल्यो
वक्राङ्गाभीष्टदनिजगुणो वापिकौघश्च तद्वत्।
स्वर्णस्तोमद्युतिभरजुषो निम्नगाभाश्च साला
लीलाशैला अपि बत तथासारसानूज्ज्वलाभाः ॥ ३४ ॥

यस्यां केलीगृहपरिसरस्थायिनी पुष्पवाटी
लङ्केवाहो बहुविधपलाशावली सञ्चकास्ति।
धर्मज्ञानां जयति नितरां सज्जनानां समाजो
गीर्वाणानां पतिरिव सदालोचनोद्भासितात्मा ॥ ३५ ॥

रथ्या यस्यां गगनसदृशश्रीः सदालोककान्ता
पृथ्वीपालः सुरपतिसमश्चामराश्लिष्टपार्श्वः।
सर्वे लोकास्त्रिदिवसमिताश्चारुसन्तानरम्याः
स्त्रीणां वक्त्रं रघुपतिनिभं ध्वस्ततारेशगर्वम् ॥ ३६ ॥

यस्यां नार्यो रुचिरतिलकालोकनीयालिकान्ता
मुक्ताहारैरधिकविमलैः सद्भिरुद्द्योतमानाः।

माद्यद्दन्तिप्रवरगमनाः कम्रपत्रावलीकाः
श्यामाः शश्वद्विपिनधरणीतुल्यकुल्या लसन्ति ॥ ३७ ॥

यस्यां नित्यं रतिरिव रमेवाद्रिकन्येव मूर्त्ति-
र्मल्लाक्षीणां विलसतितरां कामदेहानुरक्ता ।
तासां किञ्च स्मरकृदलिकालोकनं शम्भुरूप-
प्रख्यं वक्त्रं विविधविलसत्कुण्डलं चन्द्रकान्तम् ॥ ३८ ॥

यस्यां वेश्यागृहपरिसरो भासते वृत्तजाति-
प्रख्यः पातालवदपि भुजङ्गप्रयातानुषक्तः ।
क्षोणीपालोऽपि च विजयते नन्दपुत्रोपमानो
नित्यं गोत्राहितकृतरुचिः किन्तु शच्यापि तुल्यः ॥ ३९ ॥

यस्यां लोको हलधरनिभः श्वेतवाहोपमानो
भूभृत्कन्यारमणसदृशो वा सुभद्रानुषङ्गी ।
स्त्रीणां नेत्रं निगमसदृशं देवसेनाग्रदेश्यं
वीताब्दाकाशवदपि विभात्युल्लसच्चारकान्तम् ॥ ४० ॥

यस्यां वेदीवरणवलभीकुट्टिमारोहमार्ग-
प्रासादाद्या व्यजननिवहाः कामिनीवक्त्रबिम्बाः ।
माध्वीभेदाश्चषकभरिताश्चन्द्रशालोपकण्ठाः
पर्यङ्कौघा अपि च नितरामुल्लसच्चन्द्रकान्ताः ॥ ४१ ॥

सर्वाशोकोदयसुमधुरा भूमिपालप्रताप-
व्याप्ता प्रोद्भासितबहुलजातिर्लसत्पद्मिनीका ।
विश्वक्षोणीतलगमहिमा चन्द्रकान्तालयोद्य-
च्छैत्या यासौ लसति किल सर्वर्त्तु*धर्माभिरामा ॥ ४२ ॥

* 'धर्मातिहृद्या' इत्यपि पाठः ।

यासावाशाप्रसृमरयशोराशिभूमीमहेन्द्रा
(गेहे) गेहे विनिहितमहाहेमकूटा नितान्तम् ।
भास्वत्कार्त्तस्वरमयधरा कामुकानन्दियोषा-
लोकालोकापि च विजयते हन्त गोत्राभिरामा ॥ ४३ ॥

वीर्योदग्रप्रतिभटमहीपालसङ्घैरयोध्या
पुम्भिः साकं विहरणविधेर्द्वारवत्यङ्गनानाम् ।
थासावक्ष्णामपि च मधुरा सर्वतोऽलं विशाला
चित्रं चित्रं जगति नगरी लोभनीया विभाति ॥ ४४ ॥

कुत्राप्युद्यद्बहुपरिमलैर्नन्दनीया मरुद्भिः
शश्वद्भिश्चैरहह विबुधैः कुत्रचिद् भासमाना ।
स्फायत्कान्तिः क्वचन वसुभिः क्वापि विद्योतमाना
भास्वद्भिर्या जयति हि महाधामभिर्दिव्यभूमिम् ॥ ४५ ॥

लीलावापीसरसिजवने सन्ततं दीप्रहंसा
भुक्त्यावासे सततविलसत्साधुवृत्तद्विजेन्द्रा ।
कुड्यव्राते मणिगणरुचीजालकैश्चारुरक्ता
संसद्देशे विलसितबुधा भासितार्था विपण्याम् ॥ ४६ ॥

स्वच्छा सौधावलिषु सुधया नित्यरोचिष्णुकृष्णा
देवक्षेत्रे विविधरचनाभासुरे स्वान्तरस्थे ।
वारस्त्रीणां वसति(षु) विलोलद्भुजङ्गा प्रतोल्या-
मुद्यत्केतुर्ग्रहनवकयुक्तेव या सञ्चकास्ति ॥ ४७ ॥
(युगलकम् ।)

प्रासादानां वितितिषु सुखं संविशद्भोगिलोका
वैडूर्यार्कोपलमुखमणीमण्डलीशुभ्रभूमिः ।

दीक्षाकल्पप्रभृतिकषडङ्गीसमेतत्रिविद्या-
पाठोद्घुष्यद्विबुधवसतिर्या (ति ? त्रि)लोकीमनोज्ञा ॥ ४८ ॥

भृत्या देवेश्वरपुरपराभूतिदक्षा महेला-
वाहासंलालितमृदुवचोगुप्तशुम्भच्छुका च ।
गेहे गेहे विविधमणिसङ्घातलोलन्मरीचि-
र्या वा नित्यं मुनिजनमनोहारिणी लालसीति ॥ ४९ ॥

लोकोत्कृष्टक्रतुविलसिता साधुवागञ्चिता वा
शश्वद्दीव्यद्द्विजपरिवृढा किन्तु लक्ष्मीयुता च ।
सर्वत्रालं समुदितशिवा नित्यमुद्यद्वृषा वा
यासौ मूर्तित्रितयनगरीतुल्यरूपा विभाति ॥ ५० ॥

तस्यां तावत् पुरुसुकृतिभिः प्राणिभिः प्रापणीयं
हेमाम्भोजप्रभृतिसुमनस्सौरभीवासिताशम् ।
सेवालोलासुरसुरमुनिव्रातपूर्णान्तरिक्षं
धाम श्रीमन्निखिलजगतीमण्डनं भाति विष्णोः ॥ ५१ ॥

निर्वेदान्तैरपिच नितरां हन्त वेदान्तसक्तैः
सन्त्यक्ताशैरपि निजयशःपूर्यमाणाखिलाशैः ।
कारुण्यार्द्रात्मभिरपि तपःकर्मणा शुष्कदेहैः
स्वच्छस्वान्तै(रपि) लसति यत् कृष्णचित्तैर्जनौघैः ॥ ५२ ॥

दिव्यस्त्रीणां करतललसद्वल्लकीहृद्यनादो
गन्धर्वालीगलपरिगलच्चारुसङ्गीतकं च ।
त(त्त ?)द्भावा(वि ? भी)नयपटुनटीनाटकं चापि यस्मि-
न्नासीनानां नहि मदयितुं मानसं शक्नुवन्ति ॥ ५३ ॥

दिक्पालानामपि तदितरेषां च तत्पार्षदानां
प्रह्लादोऽपि प्रभवति बलिर्यत्र सन्ध्यासु नित्यम्।
वीणावादप्रभृतिषु परं दक्षिणाश्चापि वामाः
सेवां कुर्वन्ति च भगवतः सादरं चक्रपाणेः॥ ५४॥

मीलन्नेत्रोऽप्यहह सकलं सन्ततं वीक्षमाणो
नित्यं मुक्तोऽपिच सुरजितः सेवनेऽत्यन्तसक्तः।
पूर्णानन्दोऽप्यधिकरुगलं क्ष्मातलं संश्रितोऽपि
प्राप्तो विष्णोः (पद)मधियदं (?) योगिसार्थो विभाति॥५५॥

सच्चिद्रूपस्मरणविषये सम्प्रवृत्तैर्निवृत्तैः
पादाम्भोजश्रितरुचितदाने सुरागैररागैः।
वेदव्यासप्रभृतिमुनिवर्यैः समानैर्विमानैः
सद्भिर्नित्यं लसति नितरां यत्सभार्यैरभार्यैः॥ ५६॥

क्रीडत्पारावतशिखिशुकाद्यैर्विजातैः सुजातै-
र्यन्निर्यूहः स्फुरति फलकैर्वा विचित्रैः सचित्रैः।
यत्पर्यन्तोऽपि च सुरवराणां विभाभिः सभाभि-
र्विप्रश्रेष्ठैरपि जनिमृतिभ्यां वियुक्तैः सुयुक्तैः॥ ५७॥

लक्ष्मनिाथश्चिरमिह पुरे सुस्थिरां प्रेक्ष्य लक्ष्मीं
हित्वा क्षीराम्बुधिनिलयनं यत् समासाद्य धाम।
तस्या लीलाकलितहृदयः स्वैरमन्यत्र यात्रा-
वार्ताशून्यो निवसति जनान् मोदयन्नित्यवैमि॥ ५८॥

स्थानं त्वेतद् भुवनमहनीयोदयं चक्रपाणे-
श्चक्राह्वाधीश्वर! भवभवस्फीततापापहारि।

